# संस्कृत-वार्ताः

**दिनाङ्कः - 20-11-2020**

**सायं - 18**: 20

## <u>मुख्य-वार्ताः</u>

- प्रधानमन्त्रिणा सुरक्षाबलानि पाकिस्तान-प्रेषित-आतंकवादिनां व्यापादनाय भृशं प्रशंसितानि।
- भारतेन सीम्नि आतंकवादं वर्धापयितुं पाकिस्तानं दृढशब्दैः भर्त्सितम।
- प्रधानमन्त्री अवदत् भूटानस्य आवश्यकताः भारतस्य सर्वोच्चासु प्राथमिकतासु वर्तन्ते।
- पंचाशत् सहस्रतोऽधिकानि आयुष्मान-भारत-स्वास्थ्यकल्याण केन्द्राणि आभारतं पंचविंशति कोटि जनान् सेवन्ते।
- कोरोनामहामारीतः आरोग्यं प्राप्तवतां प्रतिशतता प्रवर्ध्य त्रिनवति दशमलव-षट् शून्यमितास्ति संवृत्ता।
- अन्ताराष्ट्रिय क्रिकेटपरिषदा विंशति-प्रतिविंशतिः महिला विश्वचषक प्रतियोगिता मासत्रयाय निरस्तीकृता।

---------

**प्रधानमन्त्री आतंकवादम्**

जम्मूकश्मीरे मारितातंकवादि-विषये प्रधानमन्त्री नरेन्द्रमोदी अद्य सुरक्षाधिकारिभिः सार्धं समीक्षोपवेशनं व्यदधात्। प्रधानमन्त्री व्यज्ञापयत् यत् जम्मूकश्मीरे सद्य एव व्यापादिताः चत्वारो आतंकिनः। तेभ्यः विस्फोटक-पदार्थाः शस्त्रास्त्राणि चापि अधिगतानि। एतेन सिद्ध्यति यत् अस्मदीया सेन

आतंकिनां सकल विनाशं कर्तुमस्ति सर्वात्मना प्रयतमाना। एकस्मिन् ट्वीटालेखे प्रधानमन्त्री प्रावोचत् यत् भारतीय सैन्यबलेन पुनरेकदा वीरत्वं प्रदर्शितम्। जम्मूकश्मीरे प्रवर्तमानानां लोकतान्त्रिक-गतिविधीनां विरोधिन: विरूद्धय अस्मदीया सेना सबलं प्रत्युत्तरति। ध्येयमस्ति यत् मारिता: आतंकवादिन: जैश-ए-मोहम्मद-गुल्मस्य अवर्तन्त।

**भारत-पाक**

भारतेन सीम्नि आतंकवादं वर्धापयितुं पाकिस्तानं दृढशब्दैः आलोचितम्। भारतेन निगदितं यद्यपि शान्ति-सद्भावना: स्थापयितुं त्रि-उत्तर-द्वि-सहस्रतमे ख्रीष्टाब्दे संघर्ष विरामसन्धि: अभवत्। तस्य पालनाय संयमनाय च अध्यर्थनाया: अनन्तरम् अपि पाकिस्तानीय सैनिकै: अन्तर्विष्टानाम् आतंकवादिनां सहयोग: क्रियते। विदेशमन्त्रालयस्य वक्ता अनुरागश्रीवास्तव: इदमपि अवदत् यत् आतंकवादिनां गतिविधय: पाकिस्तानस्य सैन्य साहाय्येन विना न सम्भवा:। भारतं पाकिस्तानस्य अस्य कृत्यस्य भूरिश: भर्त्सनां करोति। करतारपुरसाहिब गुरूद्वारा सन्दर्भे पृष्टस्य प्रश्नस्योत्तरे श्री-अनुराग: अवदत् यत् इदं निर्णीतम् अस्ति यत् सिक्ख-श्रद्धालु-समूह: सप्तविंशतित: दिसम्बर मासस्य प्रथमां तारिकां यावत् गुरूनानक देवस्य एक पंचाशदुत्तर-पंचशततमे प्रकाशपर्वोपलक्ष्ये गमिष्यति। कोविड् महामार्या: कारणेन सुरक्षा नियमानां पालनं दृढतया करिष्यते।

**प्रधानमन्त्री नरेन्द्रमोदी**

प्रधानमन्त्री नरेन्द्रमोदी च भूटानस्य प्रधानमन्त्री लोतेच्छेरिङ्ग महोदयो अद्य ई-रूपे-पत्रस्य द्वितीय चरणस्य प्रारम्भं कृतवन्तौ। गतवर्षे अगस्तमासे प्रधानमन्त्रिण: नरेन्द्रमोदिन: भूटानयात्रावधौ उभौ परियोजनाया: प्रथमचरणस्य संयुक्तरूपेण प्रारम्भं कृतवन्तौ आस्ताम्।

श्रीमोदी न्यगादीत् यत् भारतं कोविड्-नवदश-महामार्या: कठिने समये भूटानेन सह स्थितम् अस्ति। तेनोक्तं भूटानस्यावश्यकता: भारतस्य सर्वोच्चासु प्राथमिकतासु सम्मिलिता: सन्ति अपि च रूपेपत्रकस्य द्वितीय चरण प्रारम्भे उभयो: देशयो: मध्ये सम्बन्धा: सुदृढा: भविष्यन्ति।

श्री मोदी अग्रिमवर्षे इसरो साहाय्येन भूटानस्य प्रेष्यमाणस्य उपग्रहस्य उपरि तीव्रतया प्रचलते कार्याय अपि प्रसन्नतां व्यक्ती कृतवान। प्रधानमन्त्रिणा अभाषि यत् अस्मै कार्याय भूटानस्य चत्वारोSन्तरिक्ष-वैज्ञानिका: दिसम्बरमासे इसरोसंघटनं प्रति आगमिष्यन्ति।

भूटानस्य प्रधानमन्त्री लोते च्छेरिगं महोदय: कोविड्महामार्या: निदानाय भारतस्य प्रयत्नानां प्रशंसां कुर्वन् अवोचत् यत् आशासे भारतं महामार्या: अनन्तरं सुदृढतया उदेष्यति। रूपेकार्ड इत्यस्य प्रथमचरणस्य परियोजनायां कार्यानन्तरं भूटानजनेभ्य: एटीएम् पीओएस् टर्मिनल् इत्यस्य च उपयोगस्य सुविधा: प्राप्ता: अभूवन्।

**आयुष्मान भारतम्**

अधिभारतम् पंचाशत् सहस्रतोप्यधिकानि आयुष्मान-भारत-स्वास्थ्य-कल्याण-केन्द्राणि सन्ति कार्यरतानि। इदं हि कार्यं भारताय इतिहासगतं विद्यते। एतेन देशस्य पंचविंशतिकोटितोप्यधिका: जना: स्वास्थ्य-लाभम् अवाप्तवन्त:। स्वास्थ्य-परिवार-कल्याण-मन्त्री डॉ हर्षवर्धनेन प्रदेशा:, केन्द्रशासित-प्रदेशाश्च वर्धापिता:। अमुनोक्तं यत् भृशं महामारि-दुष्प्रभाविते कालेSपि प्रदेशै: स्वास्थ्य-कल्याण-केन्द्राणि एतानि प्रतिष्ठापितानि। अत्रांतरे स्वास्थ्यमन्त्रिणा स्वास्थ्य-क्षेत्रीया: समेपि उच्चनिम्नकर्मिण: सविशेषं वर्धापिता:, प्रोक्तं महामारि-संकटेSस्मिन् एतेषां सतत-प्रयास-बलेनैव वयं साम्प्रतं स्वस्था: सुखिनश्च स्म:।

**कोरोना**

देशे कोरोनात: आरोग्यम् अवाप्तवतां प्रतिशतता प्रवर्ध्य साम्प्रतं त्रिणवतिशमलव- षट् शून्य - संवृत्ता। विगते रात्रिंदिवे चतु: चत्वारिंशतसहस्रतोप्यधिका: संक्रमिता: स्वस्था: अभूवन्। स्वास्थ्यमंत्रालयेन विज्ञापितं यत् अद्यावधि अष्टाविंशति सहस्रोत्तर- चतुरशीति-लक्षमिता: रोगिण: उपचारानन्तरं गृहं प्रत्यावर्तिता:।

साम्प्रतं भारते त्रिचत्वारिंशत्सहस्राधिक - चतुर्लक्षमिता महामारि-प्रपीडिता: उपचाराधीना: सन्ति।

एतदतिरिच्य विगते चतुर्विंशतिहोरावधौ द्वयाशीति-उत्तर-अष्टशताधिक-चतु: चत्वारिंशत् सहस्रं विषाणो: नूतनानि प्रकरणानि पुष्टिंगतानि।

मंत्रालयानुसारि प्रशासनस्य परीक्षण-निदान-उपचाराणां प्रभावि-नीति-कारणं हि इदानीं देशे कोरोनात: मृत्युमितौ महती न्यूना विद्यते।

मृत्युमानं राष्ट्रे साम्प्रतं एक दशमलव चतु:सप्तमितं

वर्तते।एतत् मृत्युमानं विश्वापेक्षया विद्यते न्यूनम्।

गतदिनात् अद्य प्रभृति चतुरशीतयाधिक - पञ्चशतं जना: कालकवलिता: संजाता:।एवं विषाणो: दिवंगतानां संख्या द्विषष्टायुत्तर्षातधिक -द्वात्रिंशत् सहस्रोत्तरैकलक्षमिता संजाता।

भारतीयआयुर्विज्ञान-अनुसंधान-परिषदानुगुणं विगते नक्तंदिवे त्र्यशीति- सहस्रोत्तर-दशलक्षसंख्याकानि परीक्षणानि विहितानि।इत्थं अद्यावधि च सकलपरीक्षणानि पञ्चनवतिलक्षोत्तर-द्वादशकोटि-परीक्षणानि सम्पादितानि।

**भारतम् बांग्लादेश:**

भारत-बांग्लादेशयोर्मध्ये रक्षा-सहयोग-सहभागिताक्षेत्रं विगतेषु कतिपयवर्षेषु ऐतिहासिकं उत्कर्षत्वं याति। ढाकानगरे भारतीय-उच्चायोगेन फिक्की समूहेन च गतदिने आयोजिते अन्तर्जालाधृते कार्यक्रमे रक्षोत्पादन-सचिव: राजकुमार: उक्त-वक्तव्यं प्राकाशयत। रक्षाक्षेत्रे अथ पोतनिर्माणे सहयोग: इति विषयमवलम्ब्य सत्रमिदं समायोजितम् आसीत्। सत्रं सम्बोधयन् रक्षोत्पादन-सचिव: प्रावोचत् यत् बांग्लादेशेन सह भारतस्य पोतप्रांगणानां अतिसमीपता द्वयोर्देशयो: कृते महल्लाभकरी अस्ति। अमुना साबलं कथितं-रणनैतिक-सहभागिता-उत्पादन-विकास-प्रबन्धन-प्रभृतिषु क्षेत्रेषु अस्य दूरगामिन: सकारात्मक-परिणामा: भवितार:।

**जितेन्द्र: फ्रांसदेश:**

उत्तर-पूर्वीय-क्षेत्र-विकास-राज्य-मन्त्री डॉ जितेन्द्र सिंह: अब्रवीत् यत् प्रधानमन्त्री नरेन्द्र मोदी न केवलं उत्तर-पूर्व-क्षेत्रीय-विकासम् उद्दिश्य विशेष-बलमेव प्रदत्तवान् प्रत्युत एक्ट-ईस्ट-नीत्याम् आवश्यकता-नुसारं सकारात्मक-परिवर्तनमपि व्यदधात्। डॉ सिंह: भारते फ्रांस-देशस्य राजदूतं इमैन्युअल लेन्यॉ इत्यमुम् अमिलत। अत्रांतरे उत्तर-पूर्वे स्थितेषु राज्येषु संयुक्त-कार्य-योजनाया: ससम्भावना-विषयस्तेन परिचर्चित:। फ्रांस-राजदूतेन फ्रांसदेशीय-प्रशासनस्य कामना: मन्त्रिणं प्रति व्यक्तीकृता:।

अमुना कथितं यत् फ्रांस-प्रशासनं भारते उत्तरपूर्वस्यां दिशि अवस्थितेषु राज्येषु जम्मूकश्मीरे चापि सम्मिल्य नूतन-कार्यावसरान् समीहते। एतेषु क्षेत्रेषु क्षेत्रेषु पर्यटनं समेधितुमपि फ्रांस प्रशासनं लग्नमन: विद्यते।

**विश्वबालदिवस:**

अद्य विश्व-बाल-दिवस: परिपाल्यते। बालानाम् अधिकार-संरक्षणाय एतदर्थं तान् सम्प्रेरयितुं च दिवसोऽयं विशषत्वेन आमान्यते। स्वस्थ्य-विश्व–निर्माणाय स्वस्थ–शिक्षित-बालानां आवश्यकता प्रपूरणपराय विचारजननाय अपि अयं दिवस: अस्मत्कृते महत्वमाधत्ते। आकाशवाणि-विार्ताय प्रदत्ते एकस्मिन् विशिष्ट-साक्षात्कारे यूनिसेफ-भारते प्रतिनिधित्वकर्त्ता डॉ यास्मिन् अली हक् अब्रवीत् यत् ऐषम: विश्वबालदिवस: जलवायु-परिवर्तनेमधिकृत्य समायोज्यते।

**क्रिकेट**

अन्താराष्ट्रिय क्रिकेट परिषदा दक्षिण-अफ्रीकायाम् आयोजिष्यमाणा विंशति-विंशति महिला-विश्वचषक प्रतियोगिता वर्ष त्रयाय निरस्तीकृता। आईसीसी द्वारा घोषितं यत् विश्वचषक स्पर्धाणां आयोजनं नवम्बर मासे निश्चितम् आसीत्। परन्तु अधुना इदं त्रयोविंशत्युत्तर द्विसहस्रतमे वर्षे फरवरी मासे नवत: षड़्विंशतिं तारिकानां मध्ये भविष्यति।

**।। इति वार्ता: ।।**